न तरीतुं शक्यत इति 'अतर.' रत्नाकरः, स यथा बहुविधेषु रत्नेषु निष्काश्यमानेष्वपि नैव 'नीरत्नः' रत्नविरहितः कर्तुं शक्यते, कुतः ? इत्याह—यतः 'उत्पत्तिः' आकरोऽसौ रत्नानाम् । "इय" अनेनैव प्रकारेण गच्छरत्नाकरोऽपि रत्नसदृशेषु जिनकल्पिकादिषु विनिर्गतेष्वपि नैव नीरत्नो जायते, आचार्यादिरत्नानां सर्वदैव तत्र सद्भावात्, करोति च पश्चादपि बहूनन्यान् साधून् रत्नभूतानिति गच्छो जिनकल्पिकश्च उभावपि महर्द्धिकौ इति ॥ २१२३ ॥ २१२४ ॥

॥ मासकल्पप्रकृतं समाप्तम् ॥

चूर्णि-श्रीबृहद्भाष्यप्रभृतिबहुविधग्रन्थसार्थाभिरामा-
ऽऽगमैरर्थप्रसूनैरवचितनवचितैः सूक्तिसौरभ्यसारैः ।
चेतःपट्टे निधाय स्वगुरुगुरुविभवप्राप्तसन्तानदव्यै ,
श्रीकल्पे मासकल्पप्रकृतविवरणस्रग् मया निर्मितेयम् ॥

॥ ग्रन्थाग्रम्– १५६०० मूलम्. ॥

## ॥ इति श्रीकल्पे प्रथमः खण्डः समाप्तः ॥



१ °म् । 'इति' अमुना प्रका° भा० ॥ २ °हुविधरत्ने° मो० ले० क० ॥ ३ °माद् भाष्यप्र° मो० ले० ॥ ४ °नैरस्थचितन° त० डे० कां० ॥ ५ °न्तुमितिगुम्फितेयं, मो० ले० विना ॥ ६ °या सच्चयोग्या त० डे० कां० ॥